तेन सुवर्णशरीरोपरि चौर्द्देहिककरणं कार्यं तत्तत्कृच्छ्रपनेयं पापं न नाशयेत् अतो देशविशेषव्यवस्थितत्वमेव युक्तम्।

अतएवादिपुराणवचने क्वचिद्देशे क्रियते इति परम्परया प्राप्तमनुष्ठानमनुदितं मातुलकन्यापरिणयनादिवत्।

यदपि विष्णुवचने कुर्य्यादित्युक्तं तदपि देशविशेषवासिसमस्तजनानुष्ठीयमानानां परम्परया प्राप्तानामाचाराणां[1] नृपतेरवारणीयत्वात् प्रजोद्वेगनिवृत्त्यर्थं कर्त्तव्यताभ्यनुज्ञानम्।

अतएव प्राच्यदाक्षिणात्योदीच्यदेशव्यवस्थिताऽनाचारविशेषानुदाहृत्य बृहस्पतिनोक्तम्।

अनेन कर्म्मणा नैते प्रायश्चित्तदयावहाः।
विहिताकरणात् किन्तु प्रतिषिद्धनिषेवणात्।
भक्ताच्छादं प्रदायैषां शेषं गृह्णीत पार्थिवः॥

इति यत् निषिद्धक्रियानिवृत्तिहेतू प्रायश्चित्त—दण्डौ तत् परम्पराप्राप्ता(ना)चारकरणे सति न कार्य्यौ तादृशस्यानाचारस्य निवर्त्तने प्रजासंक्षोभप्रसङ्गात्।

अत[2]स्तादृशमाचारमनुपालयं स्वकुटुम्बभक्ताच्छादनादधिकं सर्व्वस्वं नृपतिना ग्राह्यमित्युक्तम्।

गौतमः—

यस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत तस्मिन्नुदकादीनि प्रेतकर्म्माणि कुर्य्युः।

---

(१) कं ग अनाचाराणाम्।

(२) ख तादृशमनाचारम्।

प्राणान्तिकप्रायश्चित्तानुष्ठानात् 'स्वयं कृतस्य शुद्धत्वात् सर्व्वं प्रेतकार्य्यं कर्त्तव्यमित्यर्थः ।

अनेनैवाप्यशुद्धस्य न कार्य्यमित्युक्तम् । अतः कथमविशुद्धस्यैवात्मघातिनोऽपि संवत्सरोपरि क्रियते । इति ।

सुरापगातीरविहारपाटके'
निवासिना भट्टनयार्थवेदिना ।
कृताऽनिरुद्धेन सतामुरःस्थले
विराजतां हारलतेयमर्पिता ॥

इति चाम्पाहट्टीयमहोपाध्यायधर्म्माध्यक्षश्रीमदनिरुद्ध-
विरचिताऽशौचव्यवस्था हारलता समाप्ता ।

ॐ रामः ।

सम्पूर्णोऽयं ग्रन्थः ।

ॐ तत्सत् ।

(१) ख तस्य ।
(२) ख पट्टके ।